सर्वायसस्तु बाणः प्रक्ष्वेडन[1] एषणश्च[2] नाराचः[3] । — An iron arrow.
तीरीतङ्कलदण्डासनादयः काण्डभेदाः स्युः ॥४६७॥ — Kinds of arrow.

The feather of an arrow 2. — पत्रपाली[1] भवेद्वाजः[2] कर्तरी[1] पुङ्ख[2] उच्यते । — The feathered part of an arrow 2.
An aim, a butt — वेध्यं[1] लक्ष्यं[2] शरव्यं[3] च निमित्तं[4] च समं विदुः ॥४६८॥

An arrow with a crescent shaped head. — अर्धचन्द्र[1]क्षुरप्रादि[2] धाराग्रं[1] मुखमुच्यते । — The broad edged head of an arrow.
आराग्रं[1] तु मुखं तेषां पुष्पपत्रादिभेदतः ॥४६९॥ — The point of an awl, an iron thong at the end of a whip.

Shooting, letting fly an arrow exercise or practice in general 2. — बाणमुक्तिर्व्यवच्छेदो[1] दीप्तिर्वेगस्य[1] तीव्रता । — The flash-like flight of an arrow.
अभ्यासः[1] कथ्यते योग्या[2] श्रमस्थानं[1] खलूरिका[2] ॥४७०॥ — A place for military exercise.

An expert or skilful archer 2. — लघुहस्तः[1] शीघ्रवेधी[2] कृतपुङ्खस्तु[1] शिक्षितः[2] । — Skilled in archery 2.
स भवेदपराद्धेषुर्यस्य लक्ष्याच्च्युतः खगः ॥४७१॥

A sword 10. — निस्त्रिंशः[1] करवालः[2] खड्गः[3] कौक्षेयकः[4] कृपाणः[5] स्यात् ।
रिष्टि[6]रसि[7]चन्द्रहासौ[8] तरवारि[9]र्मण्डलाग्रं[10] च ॥४७२॥ — A handle 2.

A sheath, a scabbard 3. — कोशः[1] प्रत्याकारः[2] खड्गपिधानं[3] त्सरु[1]र्भवेन्मुष्टिः[2] ॥
A knife 5. — असिपुत्रिका[1]सिधेनुः[2] क्षुरिका[3] पत्रं[4] च शस्त्रिका[5] ज्ञेया ॥४७३॥

An axe, a hatchet 4. — परश्वधः[a 1] कुठारः[2] स्यात्परशुः[3] स्वधितिस्तथा[4] ।
Sharpened, whettened 4. — निशातं[b 1] निशितं[2] धौतं[3] तेजितं[4] च समं स्मृतम् ॥४७४॥ — A mallet, hammer 2.

Lance 2. — प्रासो[1] निगदितः कुन्तो[2] मुद्गरो[1] द्रुघणः[2] स्मृतः । — An iron club.
A saw 2. — क्रकचं[1] करपत्रं[2] स्यात्परिघः[1] परिघातनः[2] ॥४७५॥

यष्टिपट्टिस[c]दुःस्फोटमुखण्डी[d]शङ्कुशक्तयः ।
भिन्दमाल[e]गदादण्डचक्राद्याः शस्त्रजातयः ॥४७६॥ — Kinds of different weapons.

a परस्वधः b निसानं, निशानं, निशातं, निशान्ता c पट्टिश d मुषढी, मुशंढी, मुखंढी, मुखंडी, मखुंढी e भिंडिमाला, भिंडिमाल, भिडुमाल, भिंदिपाल ।

Killing, slaughter, slaying 21.

1 2a 3
मारणं निशरणं निवर्हणं ,
4 5 6
सूदनं निरसनं निशुम्भनम् ।
7 8 9
घातनं प्रशमनं प्रमापणं ,
10 11 12
वर्जनं विशसनं प्रवासनम् ॥४७७॥
13 14 15 16
निर्वापणनिर्वासनकदनव्यापादनानि तुल्यानि ।
17 18 c 19 20 21
निर्ग्रन्थनमालम्भः प्रमया हिंसा च संज्ञपनम् ॥४७८॥

A runaway.

1 2 3 4
नष्टो गृहीतदिक् प्रोक्तः कान्दिशीको भयद्रुतः ।

Defeated in battle 2. Victorió

1 2 b 1 2
प्रस्कन्नः पतितो ज्ञेयो जितकाशी जिताहवः ॥४७९॥

A royal harem.

1 2 3
शुद्धान्तमवरोधश्च राज्ञोऽन्तःपुरमुच्यते ।

Anointed queen.

1 2
कृताभिषेका महिषी भट्टिन्य इतराः स्मृताः ॥४८०॥

A woman 29.

1 2 3 4
रामा वामा वामनेत्रा पुरन्ध्री ,
5 6 7 8
नारी भीरुर्भामिनी कामिनी च ।
9 10 11 12 13
योषा योषिद्वासिता वर्णिनी स्त्री ,
14 15 16
स्यात्सीमन्तिन्यङ्गना सुन्दरी च ॥४८१॥
17 18 19 20 21 22 23
अबला महिला ललना प्रमदा रमणी नितम्बिनी वनिता ।
24 25 26 27 28 29
दयिता प्रतीपदर्शिन्युक्ता कान्ता वधूर्वशा युवतिः ॥४८२॥

A girl 2. Half grown girl 2.

1 2 1 2
कुमारी कथिता कन्या किञ्चित्प्रौढा सुवासिनी ।

A girl who chooses her husband 2. A naked womans 2.

1 2 1 2 d
वर्या पतिंवरा प्रोक्ता नग्ना प्रोक्ता च कौटवी ॥४८३॥

A girl before menstruation.

1 2
अदृष्टरजसं नारीं नग्निकां ब्रुवते बुधाः ।

A woman married or single who continues to reside after maturity in her father's house; a young woman in general

1 2 3
वधूटी च चिरण्टी च द्वितीयवयसौ स्त्रियौ ॥४८४॥

An elderly or middle-aged widow.

1 2
अर्द्धवृद्धा तु या नारी सा कात्यायनिका स्मृता ।

A woman who has married a second time 2. Lustful, lascivious 2.

1 2 1 2
पुनर्भूर्दिधिषूः प्रोक्ता वृषस्यन्ती रतार्थिनी ॥४८५॥

a निःसरणं, निसरणं b जितकासी c प्रमयः d कोट्टवी ।

A woman whose husband is living 2. | A woman whose children are living 2.

1 2 1 2
पतिवत्नी जीवत्पतिर्जीवतोका च जीवसूः ।

A woman without husband and children.

1
रहिता पतिपुत्राभ्यां निर्वीरेत्यभिधीयते ॥४८६॥

A widow 2. | A woman who does not get menstruation.

1 2 1 a 2
विश्वस्ता विधवा प्रोक्ता पुष्पहीना च निष्कला ।

A female beggar 3. | A woman's female friend 3.

1 2 3 1 2 3
श्रमणा भिक्षुकी मुण्डा वयस्याली सखी स्मृता ॥४८७॥

A woman in her monthly courses 5.

1 2 3
अवीरुदक्या च रजस्वला स्यात् ,

4 5
आत्रेयिका पुष्पवती च नारी ।

A girl in whom the menstruation has just commenced 2.

1 2
राका भवेज्जातरजास्तु कन्या ,

A woman bringing forth a dead child 2.

1 2 c
नश्यत्प्रसूतिः कथिता च भिन्दुः ॥४८८॥

A woman of excellent qualities

1 2 3 d 4
मुख्या नारी वरारोहा वरस्त्री मत्तकाशिनी ।

(i) A clever or intriguing woman. (ii) A drunken woman.

(i) (ii) 1
स्त्री विदग्धा च मत्ता च वाणिनीत्यभिधीयते ॥४८९॥

A harlot, a prostitute 5.

1 2 3 4 5
रूपाजीवा वेश्या गणिका पण्याङ्गना तथा क्षुद्रा ।

A royal courtezan.

1 2 3
राजकुलप्रतिबद्धा वारस्त्री वारमुख्या च ॥४९०॥

A group of harlots.

1 e
गाणिक्यं गणिकानां च समूहः कथ्यते बुधैः ।

A woman in attendance in a harem. | A female messenger 2.

1 2 1 2
असिक्न्यन्तःपुरप्रेष्या दूती सञ्चारिका स्मृता ॥४९१॥

A procuress 3. | A toilet woman, a female perfumer 2.

f 1 2 3g 1 2
कुट्टिनी शम्भली चुन्दी सैरन्ध्री गन्धकारिका ।

A female servant, a female slave 5.

1 2 3 4 h 5
पोटा वोटा तथा चेटी दासी स्यात्कुट्टहारिका ॥४९२॥

A doll 2.

1 2
पाञ्चालिका पुत्रिका स्यात्काष्ठदन्तादिनिर्मिता ।

An earthen doll 2.

1 i 2
स्मृता लेप्यमयी स्त्री तु बुधैरञ्जलिकारिका ॥४९३॥

A wife 11.

1 2 3 4 5 6
दाराः क्षेत्रं कलत्रं च भार्या सहचरी वधूः ।

7 8 9 j 10 11
सधर्मचारिणी पत्नी जाया च गृहिणी गृहाः ॥४९४॥

a च निष्फला, तु निष्फली b श्रवणा, भ्रमणा c बिडुः, विंडुः, किंडुः, भिडुः, निंडुः d मत्तकामिनी, मत्तगामिनी e तु f कुट्टिनी, कुट्टनी g चुंडी, चंडी h कुट्टि, कुदि i च j गृहणी ।

Marriage, wedding 5.

1 2 3 4 5
उपयामः परिणयनं पाणिग्रहणं विवाह उद्वाहः ।

A respectable woman 2. — A faithful wife 4.

a 1 2 1 2 3 4
कुलबालिका कुलस्त्री पतिव्रता सुचरिता सती साध्वी ॥४९५॥

An unchaste woman 8.

1 b 2 3 4 5 6
पांशुला बन्धुकी स्वैरिण्यसती पुंश्चलीत्वरी ।

An impertinent woman 2.

c 7 8 d 1 2
धर्षिणी कुलटा प्रोक्ता त्वविनीताभिसारिका ॥४९६॥

A husband 14.

1 2 3 4 5 6 7
कान्तः स्यात्कमिता पतिर्वरयिता भर्ता च भोक्ता धवो ,
8 9 10 11 12 13 14
रुच्याभीकवराभिकाश्च रमणः प्राणाधिनाथोऽनुगः ।

A son 12.

1 2 3 4 5 6 7
सूनुः सन्ततिरात्मजश्च तनुजः पुत्रः प्रसूतिः सुतः ,
8 9 10 11 12
तुक् तोकं तनयश्च नन्दन इति प्राज्ञैरपत्यं स्मृतम् ॥४९७॥

A pregnant woman 4.

1 2 3 4
आपन्नसत्त्वा गुर्वी स्यादन्तर्वत्नी च गर्भिणी ।

The longing of a pregnant woman 4.

1 2 3 4 e
दोहदं दौहृदं श्रद्धा लालसा च समाः स्मृताः ॥४९८॥

The last month of pregnancy 2. — An embryo 2.

1 2 1 2
सूतिमासो वैजननो गर्भो भ्रूण इति स्मृतः ।

A lying in-chamber 2,

1 2
अरिष्टगृहमिच्छन्ति सूतिकाभवनं बुधाः ॥४९९॥

A woman who has born a child 3,

1 2 3
विजाता च प्रजाता च प्रसूता स्त्री निगद्यते ।

The womb. — Foetus; the bag which surrounds the embryo 2.

1 2 1 f 2
गर्भाशयो जरायुः स्यादुल्वं च कललं स्मृतम् ॥५००॥

The son of an unmarried girl 2. — The son of a dancing girl 2.

1 2 1 2
कन्यापुत्रस्तु कानीनो नाटेरः स्यान्नटीसुतः ।

A bastard 2. — The son of a female slave 2,

1 2 1 2
बन्धुको बन्धुकीपुत्रो गोप्यो दासीसुतः स्मृतः ॥५०१॥

The young of any animal 9. — A lad.

1 2 3 4 5 6 7
बालः पाकोऽर्भको गर्भः पोतश्च पृथुकः शिशुः ।
8 9 1 2
शावो डिम्भश्च विज्ञेयो वटुर्माणवको मतः ॥५०२॥

Old 4.

1 2 3 4
प्रवयाः स्थविरो वृद्धो यातयामश्च कथ्यते ।

Old age 2. — Young 3.

1 g 2 h 1 2 3
जरा तु विस्रसा प्रोक्ता दारकस्तरुणो युवा ॥५०३॥

a कुलबाधिका कुलपालिका b बन्धका c धर्षणी d दुर्विनीता, ह्यभिनीता
e समा स्मृता f फलिलं, कलिलं g विश्रसा, विश्चसा h दारुक ।

Mother 4. माँ के नाम ४ — अम्बा सवित्री जननी च माता,

Father 4. बाप के नाम ४ — वप्ता च तातो जनकः पिता च ।

A daughter-in-law 4 — स्नुषा जनी पुत्रवधूर्वधूः स्यात्,

A brother's wife 2. — प्रजावती भ्रातृवधूः स्मृता च ॥५०४॥

A daughter 3. — दुहिता तनया पुत्री जामाता दुहितुः पतिः । — A son-in-law 2.

दौहित्रस्तत्सुतो नप्ता स च पौत्रश्च कथ्यते ॥५०५॥ — Daughter's son.

An elder brother 3. — अग्रजः पूर्वजो ज्येष्ठः कनिष्ठोऽवरजोऽनुजः । — A younger brother 3.

A brother's son. — भ्रातृव्यो भ्रातृपुत्रः स्याद् भ्रात्रीयो भ्रातृजस्तथा ॥५०६॥

A nurse. — धात्री स्यादुपमाता भगिनी जामिः स्वसा च विज्ञेया । — A sister 3.

A sister's son 3. — तत्पुत्रः स्वस्रीयो जामेयो भागिनेयः स्यात् ॥५०७॥

A brother by the same mother. — समानोदर्यसोदर्यसगर्भाः सोदराः समाः ।

भ्रातृवर्गस्य या जाया यातरस्ताः परस्परम् ॥५०८॥ — A husband's brother's wife.

Related 9. — आत्मीयः स्वजनो बन्धुराप्तो ज्ञातिश्च बान्धवः ।

सनाभयः सपिण्डाश्च सगोत्राश्च समाः स्मृताः ॥५०९॥

The body 17. — तनुस्तनूः संहननं शरीरं,

कलेवरं विग्रहदेहकायाः ।

अङ्गं वपुर्वर्ष्म पुरं च पिण्डं,

क्षेत्रं च गात्रं च घनश्च मूर्तिः ॥५१०॥

Foot 3. — अंह्रिः पादश्चरणः पाणिः शयपञ्चशाखकरहस्ताः । — Hand 5.

A finger-nail 6. — कामाङ्कुशाः कररुहाः पुनर्नवाः पाणिजा नखा नखराः ॥५११॥

a ज्ञेयो नप्ता पौत्रश्च b पौत्रस्तु c भ्रातृजः स्मृतः d स्मृताः e अंघ्रिः, अंघ्रिः f पाणिशय ।

| | | |
|---|---|---|
| The hips and loins. | 1 2 3 4 5<br>काञ्चीपदं कलत्रं जघनं श्रोणी ककुद्मती ज्ञेया । | |
| The buttocks 5. | a 1 3 3 4 5<br>आरोहश्च नितम्बः कटी कटीरं त्रिकस्थानम् ॥५१२॥ | |
| The anus 3. | 1 2 3 1 2 b 3<br>गुदः पायुरपानं स्यात्कटिप्रोथौ स्फिजौ पुतौ । | The buttocks. |
| Thecavities of the loins. | c 1 2<br>कुकुन्दरौ समाचष्टे जनो जघनकूपकौ ॥५१३॥ | |
| | 1 2 3 4 5<br>भगो योनिरुपस्थश्च वराङ्गं स्मरमन्दिरम् । | Vagina; Pudendeem muliebre. |
| The penis. | 1 2 3 4 5<br>शिश्नः शेफोऽथ मेढ्रश्च तुल्ये मेहनशेफसी ॥५१४॥ | |
| The knee 2. The leg 2. | 1 2 1 2 1 2<br>जानुः स्यादष्ठीवान् प्रसृता जङ्घा च घुटको गुल्फः । | An ankle 2. |
| The thigh 2. | 1 2 1 d 2 3 4 e 5 6<br>ऊरुः सक्थि पिचण्डं जठरोदरतुन्दकुक्षिगर्भाः स्युः ॥५१५॥ | The belly 6. |
| The finger 2. | 1 2 1f 2 3 4 5<br>अङ्गुल्यः करशाखाः कर्णः श्रोत्रं श्रुतिः श्रवः श्रवणम् । | An ear 5. |
| The neck 5. | 1 2 3 4 g 5 1 2<br>ग्रीवा धमनिर्मन्या शिरोधरा कन्धरा गलः कण्ठः ॥५१६॥ | The throat 2. |
| A conch shaped neck, a neck marked with three lines like a shell and is considered as a sign of great fortune 1. | 1<br>रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते । | |
| The waist 4. | 1 2 3 4<br>अवलग्नं विलग्नं च मध्यमं मध्यमुच्यते ॥५१७॥ | |
| The head 7. | 1 2 3 4 5 6 7<br>मुण्डोत्तमाङ्गमस्तकमौलिशिरःशीर्षमूर्धकानि स्युः । | |
| The mouth 7. | 1 2 3 4 5 6 7<br>तुण्डं वदनं वक्त्रं लपनं मुखमास्यमाननं च समम् ॥५१८॥ | |
| The eye 9. | 1 2 3 4 5 6 7 8 9<br>दृग्दृष्टिनेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि । | |
| The tears 6. | 1 2 3 4 5h 6<br>अश्रूणि वाष्परोदननयनजलाश्रास्रुनामानि ॥५१९॥ | |
| The outer corner of the eye 2. | 1 i 2 1 2<br>नयनोपान्तमपाङ्गः कनीनिका नयनमध्यतारा च । | The pupil of the eye 2. |
| The part between the eye-brows. The corner of the mouth 2. | 1 j 2 k<br>कूर्पं भ्रुवोश्च मध्यं सृक्व स्यादोष्ठपर्यन्तः ॥५२०॥ | |

a आरोहस्तु b युतौ c ककुन्दरौ, ककुन्दरा d पित्विंडं e तुढ, तुंड f कर्णश्रोत्रं g कन्धरो h जलाश्राश्रुनामानि, जलास्नाशिश्रिनामानि, जलास्ताशुनामानि, जलाश्रुनामानि i प्रपाङ्गः स्यात् j सृक्कः, सृक्कि, सृक्कं, सृक्वा k पर्यन्तम् ।

| | | |
|---|---|---|
| The nose 5. | a 1 2 3 4 5<br>सिङ्घिनी नासिका नासा घ्राणं घोणा च कथ्यते । | |
| The tongue 3. | 1 2 3 1 2<br>रसज्ञा रसना जिह्वा तालु काकुदमुच्यते ॥५२१॥ | The palate 2. |
| The arm 5. | 1 2 3 4 5<br>दोः प्रवेष्टो भुजो बाहुर्भुजा च स्मर्यते बुधैः । | |
| The cheek 4. | 1 2 3 4<br>गण्डो गल्लः कपोलश्च हनुस्तुल्यार्थवाचकाः ॥५२२॥ | |
| The testicles, | 1 2 3 4 1 2 b<br>मुष्कोऽण्डं वृषणः कोशः सङ्ग्राहो मुष्टिरुच्यते । | The fist 2. |
| The collar bone, the clavicle. | 1 1 c 2<br>जत्रु वक्षोंऽसयोः सन्धिरूरुसन्धिश्च वङ्क्षणः ॥५२३॥ | The joint of the thigh 2. |
| Hair on the body 2, | 1 2 1 1<br>रोम तनूरुहमुक्तं नयनगतं पक्ष्म मुखगतं श्मश्रु । | An eye-lash. The beard, |
| The lips 4. | 1 2 3 4<br>अधरो दन्तच्छद ओष्ठ उच्यते दन्तवासश्च ॥५२४॥ | |
| The chin. | d1 1 2 1 2<br>ओष्ठस्याधश्चिबुकं ललाटमलिकं भुजाग्रमंसं च । | The forhead 2. The shoulder 2. |
| Armpit 2. | e 1 2 1 2 3<br>कक्षां च बाहुमूलं घाटामवटुं कृकाटिकामाहुः ॥५२५॥ | Nape of the neck 3. |
| The female breast 5. | 1 2 3 4 5 f<br>उरसिजकुचवक्षोरुहपयोधराः स्तनसमाननामानि । | |
| Nipple 4. | 1 2 3 4 g<br>उक्ताः कुचमुखचूचुकवृन्तानि शिखा च तुल्यानि ॥५२६॥ | |
| The chest, the breast 5. | 1 2 3 4 h5<br>भुजमध्यमुरो वक्षो हृदयस्थानं च वत्समिच्छन्ति । | |
| A tooth 5. | 1 2 3 4 5<br>एकार्थाः कथ्यन्ते दशनद्विजदन्तरदरदनाः ॥५२७॥ | |
| The lap 3. | 1 2 3<br>क्रोडमङ्कस्तथोत्सङ्गः प्राग्भागो वपुषः स्मृतः । | |
| The back, hinder part 2. | 1 2 1 2<br>पृष्ठं स्यात्पश्चिमो भागः कटौ च कटिशीर्षकौ ॥५२८॥ | The loins. |
| A vital member or organ 2. | 1 2 1 2<br>जीवस्थानं भवेन्मर्म पादाग्रं प्रपदं मतम् । | The extremity of a foot 2. |
| The parting line of the hair, the hair parted on each side of the head so as to leave a line. | 1<br>सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः ॥५२९॥ | |
| The hair of the head 7. | 1 2 3 4 5 6 7<br>केशाः शिरसिजमूर्धजकचचिकुरशिरोरुहाः स्मृता वालाः । | |
| | तद्बन्धविशेषाः स्युर्वेणी धम्मिल्लकुन्तलकवर्याः ॥५३०॥ | Different forms of braid or lock. |

a संघिनी, सिंघिनी b मुष्टिरिष्यते, मुष्टिरिच्यते c वंक्षिणः, वक्षणः d श्चुबुकं, श्चुवकं e कक्षा f नामानः g भवन्ति h वक्षमिच्छन्ति ।

Much or ornamented hair.

हस्तः पक्षः पाशः केशेषु बहुत्ववाचकाः शब्दाः ।

A curl lock of hair 1.

1 1
अलकं कुटिलाः केशा भ्रमरकमुक्तं ललाटस्थम् ॥५३१॥

A lock of hair or curl hanging down on the fore-head.

A lock of hair left on the crown of the head, a tuft 3.

1 2 3
बालानां तु शिखा प्रोक्ता काकपक्षः शिखण्डिका ।

Grey hair 2.

1 2 1 2
पलितं पाण्डुराः केशा व्रतिनां तु जटा सटा ॥५३२॥

An ascetics' matted hair 2.

Wrist, the extremity of the arm 2.

1 2 a 1 2
मणिबन्धः पाणिमूलं कफणिः कूर्परः स्मृतः ।

An elbow 2.

The fore arm, the part between the wrist and elbow 1.

1 b 1 2
तयोर्मध्यं प्रकोष्ठः स्यात्प्रकाण्डः कूर्परांसयोः ॥५३३॥

The upper part of the arm 2.

The mind.

1 2 3 4 5 6
चेतश्चित्तं मनः स्वान्तं हृदयं मानसं समम् ।

Intent upon one object 3.

1 2 3
एकायनं तथैकाग्रमेकतानं च तद्गतम् ॥५३४॥

Mental pain.

1 c 1 2
आधिस्तु मानसी पीडा वाञ्छितोऽर्थो मनोरथः ।

A desired object a wish 2.

An organ of sense 6.

1 2 3 d 4 5 6
खमक्षमिन्द्रियं स्रोतो हृषीकं करणं स्मृतम् ॥५३५॥

The distance from the elbow to the tip of the middle finger taken as a measure of length equal to 24 thumb. The closed fist, the distance from elbow to the end of the closed fist. The fist, a measure of capacity equal to one handful. The span of the thumb and fore finger 2. A span from the tip of the thumb to that of the ring finger.

मध्याङ्गुलीकूर्परयोर्मध्ये प्रामाणिकः करः ।

1 1 e 2
बद्धमुष्टिकरो रत्निररत्निः सकनिष्ठिकः ॥५३६॥

1 2 1 2
सम्पिण्डिताङ्गुलिर्मुष्टिः प्रसृतिः कुञ्चिताङ्गुलिः ।

1 2
प्रसारिताङ्गुलिः पाणिः कथ्यते प्रतलस्तलः ॥५३७॥

1 2 1 2
प्रादेशः स्यात्प्रदेशिन्या तालो मध्यमया भवेत् ।

1 2 1
गोकर्णोऽनामया प्रोक्तो वितस्तिः स्यात्कनिष्ठया ॥५३८॥

A cubit of the middle length from the elbow to the tip af the little finger. The palm of the hand stretched out and hollowed, a handful considered as a measure equal to two palas. The palm of the hand 2. A short span. A measure of length equal to 12 "angulis" being the distance between the extended thumb and the little finger.

An ornament, a decoration 9.

1 2 3 4 5
आकल्पो मण्डनं वेषः प्रतिकर्म प्रसाधनम् ।

6 7 8 9
भूषणं स्यादलङ्कारो नेपथ्याभरणे तथा ॥५३९॥

f 1 2 3
समालभनमिच्छन्ति चर्चां मार्ष्टिं च सूरयः ।

Smearing the body with fragrance 5.

4 5 g 1 2
स्थासकं हस्तविम्बं स्यात्परिष्कारश्च भूषणम् ॥५४०॥

An ornament 2.

A mark on the forehead.

1 2 3 4 5
तिलकं तमालपत्रं चित्रकमुक्तं विशेषकः पुण्ड्रम् ।

A mark made with sandal or any other fragrant powder on the fore-head.

1
रचिता ललाटपट्टे ललाटिका कथ्यते रेखा ॥५४१॥

a कफणः, कफेणिः, केणिः b प्रगण्डः c वांछितार्थो d श्रोतो
e संकनिष्टकः, रत्निरकनिष्ठिकः f समालंभ g परिस्कारश्च ।

Drawing lines or figures of painting on the face, arms, chest, cheek, neck etc with fragrant and coloured. Substance as a mark of decoration.

भुजशिखरस्तनमण्डलकपोलकण्ठेषु विरचिता कुशलैः ।

अनुलेपनेन लेखा निगद्यते पत्रवल्लीति ॥५४२॥ (1 a)

Saffron 7.

कुङ्कुमं (1) घुसृणं (2) वर्णं (3) प्रोक्तं लोहितचन्दनम् (4) ।

काश्मीरजं (5) च विद्वद्भिः कालेयं (6) जागुडं (b 7) स्मृतम् ॥५४३॥

Sandal wood tree

चन्दनं (1) स्यान्मलयजं (2) श्रीखण्डं (3) रोहणद्रुमः (4) ।

Musk 3.

मृगनाभिर्(1) मृगमदः (2) प्रोक्ता कस्तूरिका (3) बुधैः ॥५४४॥

A dark species of a gallochum.

Camphor 2.

कर्पूरो (1) घनसारः (2) स्यात्काकतुण्डो(1)ऽगरुः (2) स्मृतः ।

The unguent for the body.

The betelnut 2.

ताम्बूलं (1) क्रमुकं (2) प्रोक्तमङ्गरागो (1) विलेपनम् (2) ॥५४५॥

A lower garment 4.

उपसंव्यानं (1) परिधानम् (2) अन्तरीयं (3) च निवसनं (4) तुल्यम् ।

An upper garment 4.

प्रावरणं (1) संव्यानं (2) प्रच्छादनम् (3) उत्तरीयं (c 4) च ॥५४६॥

A sort of petticoat 2.

अर्धोरुकं (1) वरस्त्रीणां वासश्चण्डातकं (2) स्मृतम् ।

The ends of the cloth tied into a knot in front; the knot of the wearing garment 3.

परिधानांशुकग्रन्थिः (1) प्रोक्ता नीवी (2) तथोच्चयः (3) ॥५४७॥

A cloth 12.

चेलं (1) चीरं (2) वासः (3) कर्पटम् (4) आच्छादनं (5) निवसनं (6) च ।

अम्बरम् (7) अंशुकम् (8) उक्तं वस्त्रं (9) सिचयः (10) पटः (11 d) पोटः (12) ॥५४८॥

The four sources of cloth (1) the bark and (2) fruit of trees and plants (3) hair of insects (4) and animals.

चतुर्विधं तु विज्ञेयं त्वक्सूत्रकृमिरोमजम् ।

Silken cloth, woven silk 4.

पत्त्रोर्णं (e 1) धौतकौशेयं (2) दुकूलं (3 (i)) क्षौमम् ((ii) 4) इष्यते ॥५४९॥

(i) (ii) Also skirt.

Cotton cloth 2.

कार्पासं (1) वादरं (2) प्रोक्तं वस्त्रस्यान्तो (1) मतोऽञ्चलः (2) ।

The extreme end of the cloth 2.

New cloth 2.

अहतं (1) स्यान्नवं (2) वासो जीर्णम् (1) उक्तं पटच्चरम् (f 2) ॥५५०॥

Old cloth 2.

Washed 2.

धौतम् (1) उद्गमनीयं (2) च वर्तिर्(1) वस्तिर्(2) दशाः (3 g) सिचः (4) ।

The skirt of a web or dress 4.

एकार्था (h) आविकौरभ्ररल्लकोर्णायुकम्बलाः ॥५५१॥

Woollen garments, also blanket 2.

a पत्रवल्ली तु b जांगुडं, जागुडां, जागुडीं c मन्तरीय च d पटपोटः पटःप्रोतः e पत्तोर्णं, पूत्तूर्णं, पूत्तूर्णं f पटच्चरः g दशा, देशा h आविको।

An armour, a mail 2. Also a dress fitting close to the upper part of the body, bodice. — A sort of bodice worn by woman 2.

कञ्चुको वारवाणः स्यात्कूर्पासश्च निचोलकः ।

A garland, wreath, chaplet 3. — Chaplet of flowers worn on the hair.

स्रग्माला माल्यमाख्यातं केशमध्ये तु गर्भकः ॥५५२॥

A chaplet of flowers leaning downwards on the forehead 2.

प्रभ्रष्टकं शिखालम्बि पुरो न्यस्तं ललामकम् ।

A garland worn over the left shoulder and under the right arm like the sacred thread.

तिर्यग्वक्षसि विक्षिप्तं वैकक्षकमुदाहृतम् ॥५५३॥ [a]

A garland worn round the neck.

ग्रीवायां लम्बितं प्राज्ञैः प्रालम्बकमिति स्मृतम् ।

A chaplet tied on the crown of the head 5.

आपीडः शेखरोत्तंसावतंसाः शिरसि स्रजः । [b]

An earring 3.

कर्णपूरेऽपि दृश्येते तथोत्तंसावतंसकौ ॥५५४॥

Lac 4. — Bee wax 2.

जतुयावकलाक्षाऽलक्तकाः समाः सिक्थकं मधूच्छिष्टम् ।

Lamp-black, collyrium 2. — A mirror 3.

कज्जलमञ्जनमभिहितमादर्शो दर्पणो मुकुरः ॥५५५॥

A large earring 4.

ताडङ्कस्ताडपत्रं स्यात्कुण्डलं कर्णवेष्टनम् । [c]

Any ornament for the ear 2.

कर्णालङ्करणं सर्वं कर्णिकेत्यभिधीयते ॥५५६॥

A bracelet worn up on the upper arm 2.

केयूरमङ्गदं प्रोक्तं बाहुमूलविभूषणम् ।

A bracelet 4.

आवापः परिहार्यः स्यात्कटको वलयं तथा ॥५५७॥

An amulet, a string tied round the wrist at weddings etc. 3.

कङ्कणं हस्तसूत्रं च विदुः प्रतिसरं बुधाः ।

An ornament for the neck 2,

ग्रीवालङ्करणं सर्वं ग्रैवेयकमितीष्यते ॥५५८॥

A finger-ring 3.

अङ्गुल्याभरणं प्रोक्तमङ्गुलीयकमूर्मिका ।

A seal ring, a signet ring.

कथ्यतेऽङ्गुलिमुद्रा च भवेद्या लिखिताक्षरा ॥५५९॥

A girdle, a zone 7.

कलापः सप्तकी काञ्ची मेखला रसना तथा । [d]

A small bell 2.

कटिसूत्रं सारसनं किङ्किणी क्षुद्रघण्टिका ॥५६०॥

Anklet, any ornament for the feet 7.

सिञ्जिनी पादकटकस्तुलाकोटिस्तु नूपुरम् । [e]

मञ्जीरं हंसकं स्त्रीणां चरणाभरणं स्मृतम् ॥५६१॥

a वैकक्षि b आपीडशेखरो c ताडकं ताडपत्रं d रशना, वशमा, दशना e शिंजिनी, शिजिनी ।

A pearl-necklace having hundred strings 2.
गुच्छ-Pearl-necklace of 32 strings.
अर्धगुच्छ-A pearl-necklace of 24 strings.
हार-Necklace.

देवच्छन्दः[1] शतयष्टिरर्धो[2] माणवकः[a][1] स्मृतः ।
हारो[b] गुच्छार्धगुच्छौ[1][1] च गोपुच्छश्च[1] भवेत्क्रमात् ॥५६२॥

गोपुच्छ-A pearl-necklace consisting of four strings.

A single string of pearls 3.
A pearl-necklace having twenty strings.

एकावल्येकयष्टिः[1][2] स्यात्कथ्यते सा च कण्ठिका[3] ।

A necklace of 27 pearls 2.

प्रोक्ता नक्षत्रमाला[1] च सप्तविंशतिमौक्तिका[2][c] ॥५६३॥

The central gem of a necklace 3.

हारमध्यस्थितं[1] रत्नं नायकं[2] तरलं[3] विदुः ।

A jewel of the crest or diadem.

चूडामणिं[1] च विद्वांसो वदन्ति शिरसि स्थितम् ॥५६४॥

Crown, diadem 4.

आहुः किरीटमुष्णीषं[1][2] कोटीरं[3] मुकुटं[4] समम् ।

Beauty 5.

राढा[1] शोभा[2] विभूषा[3] स्यादभिख्या[4] सुषमा[5] समाः ॥५६५॥

Seeing, sight 8.

निभालनं[1] निशामनं[2] निध्यानमवलोकनम्[3][4] ।
ईक्षणं[5] दर्शनं[6] दृष्टिर्द्योतनं[7][8] च समं स्मृतम् ॥५६६॥

A side glance 2.
Smiling 2.

कटाक्षो[1] दृष्टिविक्षेप[2] ईषच्च[1] हसितं स्मितम्[2] ।

Shame, bashfulness 6.

ह्रीर्लज्जापत्रपा[1][2][3] व्रीडा[4] त्रपा[5] मन्दाक्षमुच्यते[6] ॥५६७॥

Embracing 7.

आलिङ्गनमुपगूहनमाहुः[1][2] परिरम्भणं[3] परिष्वङ्गम्[4] ।
आश्लेषमङ्कपालीं[5][6] क्रोडीकरणं[7] च तुल्यार्थम् ॥५६८॥

Sexual intercourse 7.

संवेशनं[1] निधुवनं[2] सम्प्रयोगो[3] रहो[4] रतिः[5] ।

An inarticulate murmuring sound uttered in cohibitation 2.

सुरतं[6] मोहनं[7] प्रोक्तं मणितं[1] रतकूजितम्[d][2] ॥५६९॥

Name of the third or agricultural and mercantile class, "Vaishyas" 5.

आर्या[1] भूमिस्पृशो[2] वैश्या[3] ऊरव्याश्च[e][4] विशः[5] स्मृताः ।

Living subsistence 4.

जीवनं[1] वृत्तिराजीवो[2][3] वार्त्ता[4] चेति निगद्यते ॥५७०॥

A trader, a merchant 5.

पण्याजीवा[1] वणिजः[2] प्रापणिका[3] नैगमाश्च[4] वैदेहाः[5] ।

A usurer 4.

द्वैगुणिको[1] वार्धुषिको[2] वृद्ध्याजीवः[3] कुसीदिकः[f][4] प्रोक्तः ॥५७१॥

a अर्घमाणकः, अर्धोमाणकः b हारौ c मौक्तिकः, मौक्तिके
d रतिकूजितम् e औरव्याश्च; ओरुव्याश्च, उरुव्याश्च, उरुयाश्च
f कुशीदिकः कुसीदकः, कुसीदः ।

Debt 4.
1 2 3 4
अपमित्यकमुद्धार ऋणं स्यात्पर्युदञ्चनम् ।

Interest on money 2. — Usury 2.
1 2 1 2
वृद्धिः कलान्तरं प्रोक्तं कुसीदं वृद्धिजीवनम् ॥५७२॥

Exchange, barter 3.
1 2 3
परिवृत्तिर्विनिमयो वैमेयश्च निगद्यते ।

Bought purchased 2. — Price 2.
1 a 2 1 2 b
प्रक्रयः क्लृप्तिकं प्रोक्तं भाटकोऽवक्रयः स्मृतः ॥५७३॥

A farmer 5.
1 2 3 c 4 5
क्षेत्राजीवः कृषिकः कृषीवलः कर्षकः कुटुम्बी च ।

Corn, grain 2. — A field, a farm 3.
d 1 2 1 2 3
सीत्यं सस्यं प्रोक्तं वप्रं क्षेत्रं च केदारम् ॥५७४॥

A plough 3. — Ploughshare 2.
1 2 e 3 1 2
हलं स्याल्लाङ्गलं सीरः फालः कुशिक उच्यते ।

A bridle 3 — The pin of a yoke 2.
1 2 3 1 2 f
योक्त्रं तु रश्मिराबन्धः शम्या च युगकीलकः ॥५७५॥

The clod of earth 2. — A harrow 2.
1 2 1 g 2
कथितो लोष्टको लोष्टः कोटीशं लोष्टभेदनम् ।

Ploughed or furrowed twice 2. — A furrow 2.
1 2 1 2
शम्बाकृतं द्विसीत्यं स्यात्सीता लाङ्गलपद्धतिः ॥५७६॥

A spade. — A sickle
1 2 1 2
गोदारणं च कुद्दालं लवित्रं दात्रमुच्यते ।

A goad for driving cattle 3. — Cut, reaped 2.
1 2 3 1 h 2
प्रतोदः प्राजनं तोत्रं लूनं दातमिति स्मृतम् ॥५७७॥

A post of a threshing floor 2. — Threshing floor 2.
1 2 i 1 2
खलेवाली भवेन्मेठिः खलधान्यं खलं स्मृतम् ।

Chaff, husk 2. — A single grain of rice 2.
1 2 1 2
बुशः कडङ्गरः प्रोक्तः कणः स्यात्क्षुद्रतण्डुलः ॥५७८॥

The beard of corn 2. — An ear of corn 2.
1 2 1 2
धान्यशूकं च किंशारुः कणिशं धान्यशीर्षकम् ।

A stalk 2. — A corn, a grain 2.
1 2 1 2 j 1 2
नालं काण्डं क्षुपो गुच्छो व्रीहिः स्तम्बकरिः स्मृतः ॥५७९॥

क्षुपो गुच्छो A clump of grass 2, — Varieties of rice, रक्तशालिः A red species of rice. महाशालिः A kind of large and sweet smelling rice. कलमः Rice sown in May-June which ripens in December-January.
रक्तशालिर्महाशालिः कलमाश्चेति शालयः ।

Name of a plant, Condia Myxa or Latifolia 3.
1 2 3
उद्दालः कथितः प्राज्ञैः कोद्रवः कोरदूषकः ॥५८०॥

a क्लृप्तकं b तथा c कर्बुकः कुटम्बी d सैत्यं सैन्यं e सीरं, शीरं f कीलिका किलिकम्, g कोटीरं, कीटिशं, काटीशं h दात्र, दान i मेढिः, मेटि, मेथि, मेधि j गुंछो, गुँष्टो, गुष्टो ।

| | | |
|---|---|---|
| A kind of pulse, Lentil 2. | a 1 2 1 2<br>मङ्गल्यको मसूर: स्यात्सिद्धार्थ: सर्षप: स्मृत: । | White mustard 2. |
| Black-mustard 3. | 1 2 3<br>आसुरी राजिका चेति कथ्यते राजसर्षप: ॥५८१॥ | |
| A sort of millet 2. | 1 2 1 2 3<br>प्रियङ्गु: कथ्यते कङ्गुरतसी स्यादुमा क्षुमा । | Linseed flax 3. |
| Peas 3. | 1 2 3<br>कलाय: खण्डिको ज्ञेय: सातीनश्च मनीषिभि: ॥५८२॥ | |
| Wild sesamum 2. | 1 2<br>जर्तिल: कथ्यते सद्भिररण्यप्रभवस्तिल: । | |
| Barren sesamum 3. | 1 b 2 3<br>तिलपिञ्जस्तिलपेजस्तथा षण्ढतिल: स्मृत: ॥५८३॥ | |
| Rice growing wild or without cultivation 2. | 1 2 1 2<br>तृणधान्यं तु नीवार: श्यामाक: श्यामको भवेत् । | A kind of edible grain or corn, also graminaceous plant 2. |
| A sort of pulse, also the wind caused by winnowing 2. | 1 2 1 2<br>वल्ला निष्पावका: प्रोक्ता आढकी तुवरी स्मृता ॥५८४॥ | A kind of pulse 2. (अरहर) |
| लाजा parched or fried grain, rice parched and flattened 2. | 1 1 2 1<br>भृष्टं धान्यं लाजा: पृथुकाश्चिपिटाश्च कुट्टितास्ते स्यु: । | कुट्टिता - Pounded, rice. |
| धाना Fried barley. | c 1 2<br>भृष्टा यवास्तु धाना दरपक्वा कथ्यतेऽभ्यूष: ॥५८५॥ | Half parched barley 2. |
| A person of the low class 5. | 1 2 3 4 5<br>शूद्रोऽन्त्यवर्णो वृषल: पद्य: पज्जश्च कथ्यते । | |
| A writer 4. | 1 2 3 4<br>लेखक: स्याल्लिपिकर: कायस्थोऽक्षरजीवक: ॥५८६॥ | |
| A cow-herd 4. | 1 2 3 4<br>आभीर: स्यान्महाशूद्रो गोपालो वल्लवस्तथा । | |
| A carpenter 5. | 1 2 3 d 4 5<br>त्वष्टा च काष्ठतट् तक्षा रथकारश्च वर्धकि: ॥५८७॥ | |
| A goldsmith. | 1 2 3 4<br>नाडिन्धम: कलाद: सुवर्णकारश्च मुष्टिको ज्ञेय: । | |
| A jeweller 2. | 1 2 1 2<br>वैकटिको मणिकारो ध्माकारो लोहकार: स्यात् ॥५८८॥ | A Black-smith 2. |
| A barber 4. | 1 2 3 e<br>क्षुरमर्दी दिवाकीर्तिश्चण्डिलो नापित: स्मृत: । | |
| A gardener 3. | 1 2 f 3<br>मालाकारस्तु विज्ञेयो मालिक: प्रातिहारिक: ॥५८९॥ | |
| A potter 2 | 1 2 1 2<br>कुम्भकार: कुलाल: स्यात्तन्तुवाय: कुविन्दक: । | A weaver 2. |
| A shampooer 2. | g 1 2 1 2<br>संवाहकोऽङ्गमर्दी स्यात्तुन्नवायश्च सौचिक: ॥५९०॥ | A tailor 2. |

a मांगल्यको b पिङ्ग c भ्रष्टं, भ्रष्टा d रथकारस्तु e श्वंडालो, श्चाडिलो f प्रातहारिक:, प्रतिहरिक: g संवाहकोऽ गमर्द: ।

| | | |
|---|---|---|
| A plasterer 2. | लेपक:[1] पलगण्ड:[2] स्याद्रङ्गाजीवस्तु[1] चित्रकृत्[2][a] । | A painter 2. |
| Plastering, painting in general. | कर्म लेप्यादिकं सर्वं पुस्तकर्म[1] स्मृतं बुधैः ॥५९१॥ | |
| An actor, mime, a dancer 5. | शैलाली[1] शैलूष:[2] कुशीलव[3]श्चारण:[4] कृशाश्वी[5] च । | |
| | जायाजीवो[6] भरतो[7] नटस्तथा[8] स्यान्नटी[1] क्षुद्रा[2] ॥५९२॥ | A dancing girl 2. |
| An artisan, a mechanic 3. | शिल्पिन:[1] कारव:[2] प्रोक्ता: प्रकृतिश्च[3] मनीषिभि: । | |
| A washerman 2. | निर्णेजक:[1] स्याद्रजक:[2] कल्पपालस्तु[1] शौण्डिक:[2][b] ॥५९३॥ | A distiller of liquors 2. |
| A fisherman 5. | कैवर्तो[1] धीवरो[2] दासो[3] मत्स्यबन्धी[4] तु जालिक:[5] । | |
| A net 2. | आनाय:[1] कथ्यते जालं[2] कुवेणी[1] मत्स्यबन्धनी[c][2] ॥५९४॥ | A fish basket 2. |
| A butcher 2. | वैतंसिक:[1] सौनिक:[2][d] स्यात्कौटिको[1] मांसविक्रयी[2] । | A meat seller 2. |
| A slaughter-house 2. | सूना[e][1] स्याद् घातनस्थानं[2] कृपाणी[1]ली[2] च कर्तरी[3] ॥५९५॥ | Scissors shears 3. |
| A shoe-maker 2. | चर्मकृत्[1]पादुकाकारो[2] नद्ध्री[1] वद्ध्री[2] च कथ्यते । | A leather thong 2. |
| A fowler, a hunter 4. | मृगयु[1]र्लुब्धको[2] व्याधो[3] बुधैर्वागुरिक:[4] स्मृत: ॥५९६॥ | |
| A rope 6. | शुल्वा[1] रज्जु[2]र्वराटश्च[f][3] वट[4]स्तन्त्री[5]र्गुण:[6] स्मृत: । | |
| A noose. | पाश:[1] स्याद्बन्धनग्रन्थि[2]र्वागुरा[1] मृगजालिका[2] ॥५९७॥ | A trap for catching beasts 2. |
| Chāndāla, an outcaste 8. | अन्तावसायी[1] चण्डालो[g][2] निषादश्च[3] जनङ्गम:[4] । | |
| | श्वपच:[5] पक्वशश्चैव[6][h] मातङ्ग:[7] प्लवक:[i][8] स्मृत: ॥५९८॥ | |
| Different sects of 'Antjati' belonging to lowest caste. | किराता: शबरा[j] निष्टचा: पुलिन्दा नाहला भटा: । | |
| | माला म्लेच्छादयो भिल्ला: कथ्यन्ते ह्यन्तजातय: ॥५९९॥ | |
| Disease, sickness, invalidity 12. | रोगो[1] रुक्[2] व्याधि[3]राकल्यं[4] गदो[5] मान्द्य[6]मपाटवम्[7] । | |
| | आम[8] आमय[9] आतङ्क[10] उपतापो[11] रुजा[12] स्मृता ॥६००॥ | |

a चित्रकर्मादिकं b सौंडिक: c मत्स्यबंधिनी d शौनिक: e शूना f रज्जुर्वटारश्च, रज्जुर्वराकरटश्च, वटारक, वटस्तंत्रीगुण:, वटस्तंत्रागुण;, वटस्तंत्रीगुणस्तथा g चांडालो h पुल्कस:, पुक्कस:, पुक्कश:, बुक्कस: i प्लवग: j शिविरा ।

| | | |
|---|---|---|
| Cough 2. | क्षवथुः कथ्यते कासो वेपथुः कम्प उच्यते । | Tremor 2. |
| Burning fever 2. | दवथुः परितापः स्याद् ग्लानिश्च क्लमथुः स्मृतः ॥६०१॥ | Fatigue, languor 2. |
| Consumption 3. | राजयक्ष्मा क्षयः शोषः शोफः श्वयथुरिष्यते । | Swelling 2. |
| A sort of cutaneous eruption 2. | किलासं कथ्यते सिध्म पामा कच्छूः खसः a स्मृतः ॥६०२॥ | Itch, scab 2, |
| | कण्डूतिः कण्डूया कण्डूः कण्डूयनं तथा खर्जूः b । | |
| Waking. | जागर्या जागरणं प्रजागरो जागरा च विज्ञेया ॥६०३॥ | |
| Boil, pimple, blister 3. | पिटकः स्फोटको गण्डः श्वित्रं कुष्ठं च पाण्डुरम् । | White leprosy 3. |
| Elephantiasis 2. | श्लीपदं पादवल्मीकः पृष्ठग्रन्थिर्गडुः c स्मृतः ॥६०४॥ | Hump on the back 2. |
| A disease producing baldness 2. | केशघ्नमिन्द्रलुप्तं स्यादर्शश्च गुदकीलकः । | Piles 2. |
| Bile 2. Phlegm 2. | मायुः पित्तम् कफः श्लेष्मा प्रतिश्यायश्च d पीनसः ॥६०५॥ | Catarrh affecting the nose 2. |
| Afflicted with rheumatism 2. | वातकी वातरोगी स्यात्सातिसारोऽतिसारकी । | Afflicted with diarrhoea or dysentry 2. |
| Pained with phlegm and scab, scabby, pained with leprosy, leprous. | सिध्मश्लेष्मार्शसंयोगात्सिध्मलः श्लेष्मलोऽर्शसः ॥६०६॥ | Afflicted with piles 2. |
| Afflicted with ringworms 2. | e दद्रुणो दद्रुरोगी स्यान्नःक्षुद्रः क्षुद्रनासिकः । | Small-nosed 2. |
| | क्लिन्ने यस्याक्षिणी पिल्लश्चिल्लश्चुल्लश्च स स्मृतः ॥६०७॥ | Blear-eyed 3. |
| Big bellied; gorbellied 2. | f पिचण्डिलो बृहत्कुक्षिस्तुन्दिलोदरिलौ च सः । | Fat, corpulent 2. |
| Bald-headed 3. | खलतिः शिपिविष्टः स्यादैन्द्रलुप्तिक एव च ॥६०८॥ | |
| Blind 2. | अन्धो ह्यनेडमूकः स्यादेडो वधिर उच्यते । | Deaf 2, |
| A dumb 3. | जडः कडः स्मृतो मूकः g कल्लमूकस्त्ववाक्श्रुतिः ॥६०९॥ | Deaf and dumb 2. |
| Lame 3. | खञ्जः पङ्गुस्तथा श्रोणः कुणिर्विकलपाणिकः । | Maimed 2. |
| Having prominent navel 2. | तुण्डिरुन्नतनाभिः स्याद्विग्रो विगतनासिकः ॥६१०॥ | Noseless. 2. |

a खशः b खर्जुः c गँडः d प्रतिशायश्च, प्रतिश्यावश्च । e दद्रणे दद्ररोगी, ददृणो ददृरोगी f पिचिंडिलो, पिडिलोचि, पिचिंडोलि g कलम् ।

| | | |
|---|---|---|
| Hump-backed 2. | गडुल:[1] कथ्यते कुब्ज:[2] खर्वशाखस्तु[1] वामन:[2] । | Dwarfish 2. |
| Dwarf 3. | पृश्नि:[1] स्वल्पशरीर:[2] स्यात्किरात:[3] स च कथ्यते ॥६११॥ | |
| A physician 5. | आयुर्वेदी[1] भिषग्[2]वैद्यो[3] दोषज्ञ:[4] स्याच्चिकित्सक:[5] । | |
| Treatment, the practice of medicine 2. | उपचर्या[1] चिकित्सा[2] स्यान्निदानं[1] हेतुरुच्यते[2] ॥६१२॥ | Diagnosis, primary cause of disease 2. |
| A poison-doctor 2. | जाङ्गुलिको[1] विषभिषक्[2] व्यालग्राह्य[1][a]हितुण्डिक:[2] । | A snake-catcher 2. |
| Medicine 6. | भैषज्यं[1] भेषजं[2] जायु[3]रगद[4]स्तन्त्र[5]मौषधम्[6] ॥६१३॥ | |
| A sort of salt. | सिन्धूत्थं[1] माणिमन्थं[2][b] च सैन्धवं[3] लवणोत्तमम्[4] । | |
| Long pepper 6. | कृष्णो[1]पकुल्या[2] वैदेही[3] मागधी[4] पिप्पली[5] कणा[6] ॥६१४॥ | |
| Dry ginger 5. | शुण्ठी[1][c] नागरमुक्ता[2] महौषधं[3] विश्वभेषजं[4] विश्वा[5] । | |
| Liquorice root 2. | मधुकं[1] यष्टिमधु[2] स्यादमृता[1] वत्सादनी[2] गुडूची[3][d] च ॥६१५॥ | A kind of plant 3. |
| Ginger 2. | आर्द्रकं[1] शृङ्गवेरं[2] स्यादजाजी[1] जीरक:[2] स्मृत: । | Cumin seed 2. |
| Black pepper 3. | वेल्लजं[1] मरिचं[2] प्रोक्तमूषणं[e][3] च मनीषिभि: ॥६१६॥ | |
| A kind of salt 2. | सौवर्चलस्तु[1] रुचक:[2] कुस्तुम्बुरु[f][1] च धान्यकम्[2] । | Coriander seed 2. |
| The aggregate of (1) black pepper (2) long pepper and (3) dry ginger 3. | त्रिकटु[1] त्र्यूषणं[2] व्योषं[3] हिङ्गु[1] रामठ[g][2] उच्यते ॥६१७॥ | Asafoetida 2. |
| Yellow myrobalan 3 | हरीतक्य[1]भया[2] पथ्या[3] धात्री[1] चामलकी[2] शिवा[3] । | Emblic my-robalan 3. (आँवला) |
| A kind of tree 3. | कलि[1]रक्षो[2] विभीत:[3] स्यात्त्रितयं[1] त्रिफला[2] स्मृता ॥६१८॥ | A mixture of (1) हरीतकी, विभीतक and आमलकी । |
| A ringworm shrub 4. | एडगज:[1] प्रपुनाटो[h][2] दद्रुघ्न[3]श्चक्रमर्दक:[4] प्रोक्त: । | |
| Asparogus racemosus 2. शतावरी in Hindi. | शतमूलिका[1] त्वभीरु[2]र्निदिग्धिका[i][1] कण्टकारिका[2] व्याघ्री[3] ॥६१९॥ | Name of a medicinal plant भटकटैया in Hindi 3. |

a व्यालग्राह्योहि  b माणिबंधं  c सुंठी, शुंठी, शंठी  d गडूची  e प्रोक्तं त्र्यूषणं, प्रोक्तं पूषणं  f कुस्तम्बरु, कस्तंबरु, कुस्तम्बरु, कुस्तंबरु  g रामठो हिङ्गुरुच्यते, हिगु व्योषं रामठ उच्यते, h प्रपुन्नाठो, प्रमुन्नाठो  i निर्दिग्धिका, निदग्धिका (गुणै: कंटकैर्वा निदिह्यते स्म उपचिता, दिह् उपचये, निदिग्धा कनि निदिग्धिका) ।

| | | |
|---|---|---|
| A particular fragrant; gum resin, bedellium. | a 1 पुराख्यो 2 महिषाक्षश्च 3 गुग्गुलः 4 स्यात्पलङ्कषः । | |
| Saftlower, कसूंभ in Hindi. | b 1 महारजनमिच्छन्ति c 2 कुसुम्भं च सुमेधसः ॥६२०॥ | |
| Vermillion 3, मोथा in Hindi. | 1 हिङ्गुलं 2 हंसपादं च d 3 कुरुविन्दं e निगद्यते । | |
| Honey 5. | 1 सारघं 2 माक्षिकं 3 क्षौद्रं 4 मधु 5 पुष्परसस्तथा ॥६२१॥ | |
| A fragrant root 2. | 1 f उशीरं 2 वीरणीमूलं 1 ह्रीवेरं 2 वालकं 3 जलम् । | A sort of perfume 3. |
| A kind of plant 4. | 1 मुस्तकः 2 कुरुविन्दः 3 स्याद् गुन्द्रा च 4 जलदाह्वयः ॥६२२॥ | |

इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां

भूमिकाण्डं द्वितीयं समाप्तम् ॥२॥

a सुराव्यो महिषाख्यश्च b महारजत c कुसंभं d करविंदं
e प्रचक्षते f उसीरं।

# तृतीयं पातालकाण्डम्

**The infernal regions 6.**

1 2 3
वडवामुखं पातालं वैरोचननिकेतनम् ।
4 5 6
तथाधोभुवनं प्रोक्तं नागलोको रसातलम् ॥६२३॥

**A hole 16.**

1 2 3 4 5 6 7 8
निम्नमगाधो गर्तः श्वभ्रं शुषिरं वपा बिलं विवरम् ।
a 9 10 11 12 13 14 15 16
अन्तरमवटु च्छिद्रं निर्व्यथनं रन्ध्ररोककुहरदराः ॥६२४॥

**The hell 3.**

1 2 3
निरयो दुर्गतिश्चैव नरकः परिकीर्तितः ।

**An (evil) spirit subject to the torments of hell.**

1 2 3 b
नारका जन्तवः प्रेता यात्याश्चैवातिवाहिकाः ॥६२५॥

**Torment 2.** / **Confinement 2.**

1 2 1 2
यातना कारणा प्रोक्ता कारा बन्धनमुच्यते ।

**Pain 6.**

1 2 3 c 4 5 6
आबाधा वेदना दुःखमर्तिः पीडा व्यथा तथा ॥६२६॥

**Sin, wrong 14.**

1 2 3 4 5 6 7 8
वृजिनं दुरितं दुष्कृतमघमंहः किल्विषं तमः कल्कम् ।
9 10 d 11 12 13 14
एनः कल्मषमशुभं पापं स्यात्पातकं पाप्मा ॥६२७॥

**Death 11.**

1 2 3 4 5 6 7
निधनं नाशो मृत्युर्मरणं पञ्चत्वमत्ययः कालः ।
8 9 10 11
संस्था स्याद्दिष्टान्तो निमीलनं दीर्घनिद्रा च ॥६२८॥

**Dead 7.** / **Corpse 2.**

1 2 3 4 5
परासुरुपसम्पन्नः प्रमीतः संस्थितो मृतः ।
6 7 1 2
प्रेतः परेतश्च तथा कुणपः शवमुच्यते ॥६२९॥

a अन्तरमवाक्, अंतरमवट b श्चैवात्यवाहकाः, श्चैवातिवाहकाः
c दुःखमार्तिः d कलुष ।

| English | Sanskrit | English |
|---|---|---|
| | 1 2 1 2 3 4 | |
| Headless trunk retaining some power of action 2. | कबन्धः कथ्यते रुण्डः क्षतमीर्ममरुर्व्रणः । | Wound 4. |
| | 1 2 3 4 5 | |
| The skin, hide 5. | असृग्धराजिनं चर्म कृत्तिस्त्वक् परिकीर्तिता ॥६३०॥ | |
| | 1 a 2 3 4 5 6 | |
| Flesh 8. | पललं जाङ्गलं मांसं पलं पिशितमामिषम् । | |
| | 7 8 1 b 2 | |
| | क्रव्यं तरसमेकार्थं विस्रं स्यादामगन्धिकम् ॥६३१॥ | The smell of raw meat 2. |
| | 1 2 3 4 5 6 7 | |
| Blood 7. | क्षतजं लोहितमस्रं रुधिरमसृक् शोणितं च रक्तं स्यात् । | |
| | 1 2 3 4 | |
| A bone 4. | अस्थीनि धातुकीकसकुल्यानि भवन्ति तुल्यानि ॥६३२॥ | |
| | 1 2 3 | |
| A skeleton 3. | शरीरस्यास्थि कङ्कालं तथा स्यादस्थिपञ्जरम् । | |
| | 1 2 3 c | |
| The skull 3. | शिरसोऽस्थि करोटिः स्यात्कपालं शकलं च तत् ॥६३३॥ | |
| | 1 2 1 2 | |
| The radius of the arm 2. | शाखास्थि नलकं प्रोक्तं पृष्ठस्यास्थि कसेरु च । | Backbone 2. |
| | 1 2 1 2 3 | |
| The principal artery of the body 2. | कण्डरा स्यान्महास्नायुः स्नसा स्नायुः शिरा स्मृता ॥६३४॥ | Sinew 3. |
| | d 1 2 1 2 3 | |
| The brain 2. | मस्तिष्कं मस्तकस्नेहो वपा मेदो वसा स्मृता । | The serum or the lymph of the flesh 3. |
| | 1 2 1 2 | |
| An entrail 2. | अन्त्रं पुरीतत्कथितं कालखण्डं यकृन्मतम् ॥६३५॥ | Liver 2. |
| | 1 2 1 2 e | |
| The heart 2. | बुक्कं स्यादग्रमांसं च तिलकं क्लोम कथ्यते । | The lungs 2. |
| | 1 2 3 4 | |
| A worm. | कृमिः कीटस्तु नीलङ्गुः पुलकश्च समः स्मृतः ॥६३६॥ | |
| | 1 2 3 4 5 | |
| Excrements, ordure 12. | उच्यते वर्चं उच्चारो वर्चस्कोऽवस्करः शकृत् । | |
| | 6 7 8 9 10 11 12 | |
| | गूथं कीटं च विट् विष्ठा पुरीषं शमलं मलम् ॥६३७॥ | |
| | 1 2 3 4 5 6 | |
| Semen, virile 6. | शुक्रं वीर्यं बलं बीजमिन्द्रियं रेत उच्यते । | |
| | 1 2 1 2 | |
| Crematorium, cremation ground; burning ghat 2. | श्मशानं स्यात्पितृवनं चिता चित्या च कथ्यते ॥६३८॥ | A funeral pile 2, a pile of fuel on which the dead body is cremated 2. |
| | 1 2 1 2 | |
| Crying 2. | क्रन्दितं रुदितं प्रोक्तं विलापः परिदेवनम् । | Lamentation 2. |
| | 1 2 1 2 | |
| Bathing after the performance of funeral ceremony 2. | अपस्नानं मृतस्नानं निवापः पितृतर्पणम् ॥६३९॥ | Presents given to the deceased 2. |

a जागरं b विश्रं c यत् d मस्तक्यं, मस्तियु, मस्तिक्यं
e क्लोममिष्यते ।

A snake, a serpent 29.

1 2 3 a 4 5 6 7 b
* विषधरदन्दशूकपवनाशनसर्पसरीसृपोरगव्याल-
8 9 10 11 12 13
भुजगभुजङ्गकुम्भीनसपन्नगनागभोगिनः ।
14 15 16 17 18 19 20
अहिफणभृत्पृदाकुकाकोदरकञ्चुकिचक्रिगूढपाद् ,
21 22 23 24 25
द्विरसनकाद्रवेयदर्वीकरदृक्श्रुतयो भुजङ्गमाः ॥६४०॥
c 26 27 28 29
आशीविषो दीर्घपृष्ठः कुण्डली जिह्मगः स्मृतः ।

The hood of a snake 3. — Poison 3.

1 2 3 1 2 3
फणः फणा फटा प्रोक्ता विषं स्याद्गरलं गरः ॥६४१॥

The coil of a snake. — A serpent's fang.

1 d 1 2
अहेः शरीरं भोगः स्यादाशीर्दंष्ट्राभिधीयते ।

A sort of snake 2. — The boa 3.

e 1 2 1 2 3 f
भवेत्तिलित्सो गोनासो वाहसोऽजगरः शयुः ॥६४२॥

A water snake 2. — A kind of snake 2.

1 2 1 g 2
अलगर्दो जलव्यालो राजिलो डुण्डुभः स्मृतः ।

A sort of snake 2. — A large species of serpent 2.

h 1 i 2 1 2
अहीरणी स्याद्द्विमुखो राजसर्पश्च सर्पभुक् ॥६४३॥

The cast off skin or slough of a snake.

j 1 2 3 4
निर्ल्वयनी निर्मोकः कञ्चुक उक्ता भुजङ्गमुक्ता त्वक् ।

Ant-hill 4.

k 1 2 3 4
वम्रीकूटं नाकुर्वल्मीको वामलूरश्च ॥६४४॥

A sort of ant 4.

1 2 3 1 4
उपजिह्वोपदीका च वम्री स्यादुपदेहिका ।

The sting of scorpion 2. — A scorpion 3.

1 2 1 2 3
अलं वृश्चिकलाङ्गूलं द्रुत आलिश्च वृश्चिकः ॥६४५॥

A sort of poison 9.

1 2 m 3 4
ब्रह्मपुत्रः शौल्किकेयो दारदश्च प्रदीपनः ।
5 6 7 8 9
रसः सौराष्ट्रिकः क्ष्वेडस्तीक्ष्णश्च विषमुच्यते ॥६४६॥

* The metre (छन्द) of this stanza is called धृतश्री or according to others पञ्चकवली । It consists of 4 tetrastichs, each containing 28 short syllables, arranged in the following order; ⏑⏑⏑⏑⏑–⏑–⏑⏑⏑⏑–⏑⏑⏑⏑⏑– ⏑–⏑–1. It occurs again in IV । (६८६) see माघ ३–८२ । a पवनाशसर्प b व्यालः, c आशीर्विषो d आशीर्दंशा, आसीदंष्ट्रा e भवेतिलंगो, भवेत्तिलंसो, भवेत्रिलिंगो f स्मृतः g दुंदुभः दुंदुभिः h अहीरागी अहीरगी i द्विजिह्वः स्यात् j निर्लयनी, निर्लूयनी k वम्रीकूटं, वल्मीकूटं, वौल्मीकूटं l वम्री m शौल्किकेयः ।

Different kinds of poison 6.

a 1 2 3 4
शृङ्गिको वत्सनाभश्च कालकूटो हलाहलः ।
5 b 6
काकोलो विस्फुलिङ्गश्च तद्भेदाः स्युरनेकधा ॥६४७॥

Water 26.

1 2 3 4 5 6
आपस्तोयं घनरसपयः पुष्करं मेघपुष्पं ,
7 8 9 10 11 12 13
कं पानीयं सलिलमुदकं वारि वाः शम्बरं च ।
14 15 16 c 17 18 19 20 21 22
अर्णः पाथः कुशजलवनं क्षीरमम्भोऽम्बु नीरं ,
23 24 25 26
प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च ॥६४८॥

Deep 5.

1 2 3 4 d 5
अतलस्पर्शमगाधं गम्भीरं स्याद् गभीरमस्थागम् ।

Navigable 2. — Water just drawn out of the well.

1 2 1
नावा तार्यं नाव्यं द्राग्भृतकं तत्क्षणोद्धृतं तोयम् ॥६४९॥

Frost, cold 8

1 2 3 4 5 6
प्रालेयमवश्यायस्तुहिनं शिशिरं हिमं तुषारं च ।

A mass of snow 2.

7 8 1 2
मिहिका स्यान्नीहारो हिमसंघातो हिमानी च ॥६५०॥

Erection of the hair of the body 8.

1 2 3 4 5
रोमाञ्चः पुलकः स्यात्कण्टकमुद्धुषणमुल्लकसनं च ।
6 e 7 8
रोमोद्गमरोमविकाररोमहर्षाः समानार्थाः ॥६५१॥

The sea, an ocean 12.

1 2 3 4 5 6
रत्नाकरः सरस्वानुदधिरुदन्वान्सरित्पतिरकूपारः ।
7 8 9 10 11 12
पारावारस्तोयनिधिरर्णवजलराशिसागरसमुद्राः ॥६५२॥

A wave, a billow 3.

1 2 3
वीची भङ्गस्तरङ्गः स्यात्तन्महत्त्वे च कथ्यते ।

A great wave 5.

1 2 3 4 5
ऊर्मिरुत्कलिकोल्लोलः कल्लोलो लहरी तथा ॥६५३॥

A shore 2. — Tide, flow, current; also sea-coast, sea-shore 2.

1 f 2 1 2
मर्यादा कूलदेशोऽस्य वेला वृद्धिश्च वारिणः ।

A wood on the sea-coast.

1
वेलावनं तु विज्ञेयमुपकण्ठेऽस्य यद्वनम् ॥६५४॥

A sea-trader 2 — A boat, a ship 2.

1 2 g 1 2
सांयात्रिकः पोतवणिक् पोतः प्रवहणं स्मृतम् ।

The mast of a ship, also a stake to which a boat is moored; also a rock or tree in the midst of a river 2. — A sailor 2.

1 2 1 2
कूपको गुणवृक्षः स्यान्नियामः कर्णधारकः ॥६५५॥

a शृंगिका b विस्फुलिंगः स्यात् तद्भेदा अप्यनेकधा c कुशजलवम d मस्ताङ्गं e रोमोद्गरोरोमविकारो, रोमरोमविकारो, रोमोद्गमोरोमविकारो f कूलदेशास्य, कूलदशाश्च g प्रोतः ।

Any large aquatic animal, a sea-monster 3.

1 2 3
अन्तर्जलचरं सत्त्वं क्रूरं यादोऽभिधीयते ।

A shark 2.
1 2 1 2
अवहारः स्मृतो ग्राहः कुम्भीरो नक्र उच्यते ॥
A crocodile 2.

A tortoise 3.
1 2 3 1
कच्छपः कमठः कूर्मस्तद्भार्या च डुली स्मृता ॥६५६॥
The female tortoise.

a 1 2 3 4 5 6
वैसारिणो विसारः पृथुरोमा जलचरो झषो मत्स्यः ।

A fish 11.
7 8 9 10 11
तिमिरनिमिषश्च मीनः शकली शल्की च विज्ञेयः ॥६५७॥

A sort of fish 2.
1 2 b 1 2
सहस्रदंष्ट्रः पाठीनः प्रोष्ठी च शफरी स्मृता ।

A shrimp or prawn; a sort of fish 2.
1 2 1 2
नलमीनश्चिलिचिमः कुलीरः कर्कटो मतः ॥६५८॥
A crab 2.

Which are large, a sort of fish.
1 2 3 4 5 c 6 d
शालः शकुलः कुलिशो राजीवो रोहितश्च पल्लवकः ।
7 e 8 9 10
शृङ्गीमद्गुरवागुसनन्द्यावर्तादियो महामत्स्याः ॥६५९॥

A kind of sea-animal, a crocodile, a shark 2.
1 2 1
मत्स्यविशेषो मकरः करिमकरो भवति तद्विशेषस्तु ।
A fabulous sea-monster.

A sort of large fish.
f 1 2 3
चीरिल्लितिमितिमिङ्गिलगिलादयो महामत्स्याः ॥६६०॥

Having recently come out of a small egg, also a shoal of fish, a multitude of fish 2.
1 2 g
क्षुद्राण्डो मत्स्यसंघातः पोताधानं च कथ्यते ।

A worm 2.
1 2 h 1 i 2
गण्डूपदः किञ्चुलको जलौकाः स्युर्जलौकसः ॥६६१॥
A leech 2.

A frog 8.
1 2 3 4 5 6
मण्डूकः प्लवको भेकः शालूरो दर्दुरो हरिः ।
7 8 1
प्लवङ्गमः प्लवगः स्याद्वर्षाभूस्तद्वधूः स्मृता ॥६६२॥
The female frog.

यावन्तो दृश्यन्ते नरकरितुरगादयः स्थले जीवाः ।
j
तावन्तः सलिलेष्वपि जलपूर्वास्ते तु विज्ञेयाः ॥६६३॥

A pearl 3.
1 2 3
उक्ता मुक्ता मौक्तिकं शौक्तिकेयं ,

Pearl-oyster 2.
1 2
मुक्तास्फोटः शुक्तिराख्यायते च ।

a वैसारणो, वैशारणो b प्रौष्ठी c लोहितश्च
d पल्लपिकः e मद्गुरु f चिरिल्लि g पोतादानं
h कंचुलको, किंजलको i जलौकाश्च, जलोकसः,
जलोकाः स्युः j तेऽपि ।

| | | |
|---|---|---|
| A conch, shell 2. | [1]कम्बुः [2]शङ्खः [1]क्षुल्लकाः [2]क्षुद्रशङ्खाः , | A small shell 2. |
| | शम्बूकास्ते स्युः [1]कपर्दो [2]वराटः ॥६६४॥ | A small shell used as a coin (कौड़ी). |
| | [1]सिन्धुः [2]स्रवन्ती [3]तटिनी [4]तरङ्गिणी , | |
| A river 24. | [5]नदी [6]धुनी [7]निर्झरिणी च [8]निम्नगा । | |
| | [9]कूलङ्कषा [10]शैवलिनी [11]सरस्वती , | |
| | [12]समुद्रकान्ता [13]ह्रदिनी [14]तथापगा ॥६६५॥ | |
| | [15]स्रोतः [16]स्रोतस्विनी [17]कर्षूः [18]कुल्या [19]द्वीपवती [20]सरित् । | |
| | [21]रोधो वप्रस्तु विज्ञेयो [22]भिद्य [a][23]उद्ध्यो [24]नदः स्मृतः ॥६६६॥ | |
| A bank, a shore 6. | [1]तीरं [2]कूलं [3]तटं [4]कच्छः [5]प्रपातो [6]रोध उच्यते । | |
| Near bank 2. | [b][1]अर्वाक्कूलम[2]पारं स्यात्[1]परं [2]पारमिति स्मृतम् ॥६६७॥ | Opposite shore 2. |
| The swelling or rising of a river or sea, flood 2. | पात्रं तु कूलयोर्मध्यम[1]आवर्तः [2]पयसां भ्रमः । | A whirl, an pool, eddy whirl 2. |
| | [1]पूरः [c]स्यादम्भसो [2]वृद्धिः [1]फेनो [d][2]डिण्डीर उच्यते ॥६६८॥ | Froth, foam 2. |
| A stream 6. | [1]ओघः [2]प्रवाहो [e][3]वेणी च [4]धारा [5]स्रोतो [6]रयः स्मृतः । | |
| Confluence or junction of two rivers 3. | [1]सम्भेदः [2]सङ्गमो नद्योः [f][3]संवेद्यश्च निगद्यते ॥६६९॥ | |
| A mound in the middle of a river 2 | [1]सैकतं [2]पुलिनं [3]द्वीपं [1]सिकता [2]वालुका स्मृता । | Sand, gravel 2. |
| An island, a cape. | मध्ये द्वीपमन्तरीपं [1]ह्रदस्[2]तोयाशयो मतः ॥६७०॥ | A lake 2. |
| The bend of a river 2. | [1]चक्राणि [2]पुटभेदाः स्युः [1]सेतु[g][2]र्वरण उच्यते । | A bridge 2. |
| Fare 2. | [1]आतरस्[2]तरपण्यं च [h][1]तल्पं [2]स्यादुडुपः [3]प्लवः ॥६७१॥ | A raft, float 3. |
| A boat, a ship 4. | [1]तरी[2]र्नौ[3]र्मङ्गिनी [4]बेडा [1]नौदण्डः [2]क्षेपणी स्मृता । | An oar 2. |
| A rudder 2 | [1]अरित्रं [2]कोटिपात्रं स्यात्[1]पुलिन्दो [i][2]मङ्ग उच्यते ॥६७२॥ | The head of a boat 2. |

a उध्यो, उयो, उद्यो, उद्ध्यो  b अवाक्कूल  c स्यादम्भसां
d डिंडिम  e वेणी तु  f संवेद्यस्तु, संवद्यश्च निगद्यते  g सेतुर्वारणमुच्यते  h तल्पं स्यादुडुपं  i पल्वणं ।

The ganges 9.

1 2 3 4 5
भागीरथी सुरसरिद्विष्णुपदी जाह्नवी तथा गङ्गा ।
6 7 8 9
मन्दाकिनी त्रिपथगा सरिद्वरा त्रिदशदीर्घिका प्रोक्ता ॥६७३॥

The river Godawari 2. — The river Yamuna 3.

1 2 1 2 3
गोदावरी च गोदा कालिन्दी दिनकरात्मजा यमुना ।

The river Sone 2. — The river Narbada 3.

1 2 1 2 3
शोणो हिरण्यबाहुर्मेकलकन्या च नर्मदा रेवा ॥६७४॥

A small pond 3. — A large pond 3.

1 a 2 3 1 2 3
वेशन्तः पल्वलं तल्लं कासारः सरसी सरः ।

A natural pond 2. — An artificial pond 2.

b 1 2 1 2
आखातो देवखातः स्यात्खाता पुष्करिणी भवेत् ॥६७५॥

A pond 2. — A bridge 2.

1 2 1 2
आधारश्च तडागं स्यादाली पाली च कथ्यते ।

A moat, a ditch 2.

1 2
परिखा दीर्घिका प्रोक्ता खाता या परितः पुरम् ॥६७६॥

A drain 2. — A spring 2.

1 2 1 c 2
परीवाहो जलोच्छ्वास उत्सः प्रस्रवणं स्मृतम् ।

Drop.

1 2 3 4
विप्रुषो विन्दवः प्रोक्ताः पृषतः पृषतास्तथा ॥६७७॥

Liquidated food; also mud 2.
Mud, mire 6.

1 d 2 1 2 3
पिच्छिलं स्याद्विजपिलं पङ्कः शादो निषद्वरः ।
4 5 e 6
जम्बालः कर्दमः प्रोक्तो बुधैरिचिकिलस्तथा ॥६७८॥

A lotus 17.

1 2 3
सहस्रपत्रं शतपत्रमम्बुजं
4 5 6
कुशेशयं तामरसं सरोरुहम् ।
f 7 8 9
विसप्रसूनं कमलं महोत्पलं,
10 11 12 13
सरोजमब्जं नलिनं च पुष्करम् ॥६७९॥
14 15 16 17
राजीवमरविन्दं च पद्मं पङ्कजमिष्यते ।

Red lotus. — A white lotus 2.

1 1 2
रक्तं कोकनदं प्रोक्तं पुण्डरीकं सिताम्बुजम् ॥६८०॥

The white water lily 2. — A blue lotus 4.

1 2 1 2
सौगन्धिकं च कह्लारं स्यादिन्दीवरमुत्पलम् ।

White lotus 2.

3 4 1 2
नीलोत्पलं कुवलयं कैरवं कुमुदं विदुः ॥६८१॥

a पल्वणं b अखातो c प्रवहणं d स्याद्विजवलं e बुधै-रिचकिल f विसप्रसूतं ।

| | | |
|---|---|---|
| A pericarp of lotus 2. | 1 a b 1 2<br>कर्णिका बीजकोशः स्यात्किञ्जल्कं केसरं स्मृतम् । | The filament of a flower 2 |
| Fibrous root of a lotus; a lotus fibre 3. | 1 c 2 3 1 2<br>मृणालं स्याद्बिसं कन्दो विसिनी नलिनी भवेत् ॥६८२॥ | A lotus plant, an assemblage of lotuses, lotus fibre; also a lake abounding in lotuses 2. |
| (a) lotus plant bearing white lotuses (b) place or pond abounding in white lotuses (c) an assemblage of white lotuses. | 1 2 3<br>कुमुद्वती कुमुदिनी बुधैः कैरविणी स्मृता । | |
| A water plant moss. | d 1 2 1 2<br>शेवालं शैवलं प्रोक्तं जलशूकं च नीलिका ॥६८३॥ | Moss 2. |
| A well 2 प्रधिर्नेमिः A pulley, the periphery or circumference of a wheel 2. | 1 2 1 2 1 2 e 3<br>अन्धुः कूपः प्रधिर्नेमिश्चुरी चुण्ढी च चूतकः । | A small well or reservoir 3. |
| A small pool or pond near a well or a well itself 2. | 1 2 1 2<br>निपानमुदपानं च वाप्याहावश्च कथ्यते ॥६८४॥ | A trough near a well for watering cattle 2. |
| The rope and bucket of a well 2. | f 1 2 1 2<br>उद्घाटकं घटीयन्त्रं पादावर्तोऽरघट्टकः । | A wheel or machine for raising water from a well 2. |
| A canal 2. | 1 g 2 1 2<br>पानं तु सारणिः प्रोक्ता प्रणाली जलपद्धतिः ॥६८५॥ | A channel, a drain, a gutter 2. |

इति श्रीभट्टहलायुधकृतायामभिधानरत्नमालायां

पातालकाण्डं तृतीयं समाप्तम् ॥३॥

a बीजकोशं b किञ्जल्कः किंजः c स्याद्बिसकन्दो d शैवालं e चंठी, चुंडी f उद्घाटनं g सारणैः, सारणं ।

# चतुर्थं सामान्यकाण्डम्

* 1 2 3 4 5 6 7 8
निकरनिकायनिवहविसरव्रजपुञ्जसमूहसञ्चयाः ,
9 10 11 a 12 13 14 15
समुदयसार्थयूथनिकुरम्बकदम्बकपूगराशयः ।
16 17 18 19 20 21 22
चयसमवायवृन्दसन्दोहसमाजवितानसंहति-
23 24 25 26 27 28 29 30
प्रकरगणौघसंघसंघातव्रातकुलोत्कराः स्मृताः ॥६८६॥

Heap, collection 40.

31 b 32 33 34 35
पटलं पेटकं चक्रं चक्रवालं च मण्डलम् ।
36 37 38 39 40
जालं जातं तथा व्यूहवारस्तोमाश्च ते स्मृताः ॥६८७॥

1 2 3 4 5 6 7 8
सूक्ष्मलेशलवश्लक्ष्णक्षुद्रदभ्रकणाणवः ।
9 10 11 12 13 14 15
किञ्चिन्मात्रतनुस्तोकह्रस्वाल्पत्रुटयः समाः ॥६८८॥

Small, little, minute 15.

c 1 2 3 4 5 6 7
प्राग्र्यं प्राग्रहरं प्रवेकमपरं वर्यं वरेण्यं वरं ,
8 9 10 11 12 13 14
श्रेष्ठं प्रेष्ठमनुत्तमं च मधुरं मञ्जु प्रियं मञ्जुलम् ।
15 16 17 18 19 20 21
हृद्यं हारि मनोहरं च रुचिरं कान्तं परं सुन्दरं ,
22 23 24 25 26 27 28 29
सौम्यं साधु च वल्गु चारु सुषमं वामं शुभं पेशलम् ॥६८९॥

Fine, pleasing 42.

* This छन्द is called ध्रितश्री or पञ्चकवली consisting 4 tetrastichs each containing 28 short syllables arranged in the following order⏑⏑⏑ ⏑–⏑–⏑⏑⏑–⏑⏑⏑–⏑⏑⏑–⏑⏑⏑–⏑– it also occured in sloka 640. It is also used by the poet माघ in शिशुपालवध ३–८२ ।

a निकरंब b पेटलं c प्राग्रं ।

Chief, Principal.

30 31 32 33
अग्रयं प्रधानं प्रमुखं पुरोगं,
34 35 36 37
मुख्यं पराध्यं प्रवरं प्रवर्हम् ।
38 a 39 40
अग्रेसरं सत्तममुत्तमं च,
41 42
ग्रामण्यमग्रण्यमुदाहरन्ति ॥६९०॥

Doubt, hesitation9.

1 2 3 4 b 5 6
शङ्का वितर्कः सन्देहः संशयारेकविभ्रमाः ।
7 8 9
विचिकित्सा विकल्पश्च भ्रान्तिरेकार्थवाचकाः ॥६९१॥

Near 19.

1 2 3 4
समीपं सनीडं समर्यादमारात्,
5 6 7 8
सदेशं सवेशं ससीमोपकण्ठम् ।
9 10 c 11
तथाभ्यर्णमभ्यग्रमभ्याशमाहु—
12 13 14
र्बुधाः सन्निधानान्तिके सन्निकृष्टम् ॥६९२॥
15 16 17 18 19
आसन्नं सविधं पार्श्वमुपान्तमपदान्तरम् ।

Remote, distant 5.

1 2 3 4 5
विप्रकृष्टं परं दूरमाराद् व्यवहितं स्मृतम् ॥६९३॥

Like, similar 11.

1 2 3 4
सदृक् समानः सदृशः सदृक्षः,
5 6 7 8
प्रख्यः प्रकाशः प्रतिमः प्रकारः ।
9 10 11
तुल्यः समः सन्निभ इत्यभिज्ञाः,
शब्दाः प्रयोगेषु गवेषणीयाः ॥६९४॥

Fickle 10.

1 2 3 4 5 6 7
लोलं चपलं चटुलं प्रचलं तरलं परिप्लवमधीरम् ।
8 9 10
पारिप्लवं च धीराश्चलाचलं चञ्चलं च कथयन्ति ॥६९५॥

Crooked 12.

1 2 3 4 5 6 7
वक्रं वृजिनं भङ्गुरमाविद्धं वेल्लितं नतं जिह्मम् ।
8 9 10 11 12
भुग्नमरालं कुटिलं व्याकुञ्चितमूर्मिमत्कथितम् ॥६९६॥

a सत्तमनुत्तमं, सतममुत्तमं, सत्तमुत्तमं b संशयांवेक, संशयावेक, संशयोद्रेक c भ्यासमा ।

1 2 3 4 5 6 7 8 9 10
द्राक् चपलं लघु मङ्क्षु स्राक् तूर्णं त्वरितमाशु शीघ्रमरम् ।
11 12 13 14 15 16
Soon, quickly 16. अह्नाय सत्वरं च क्षिप्रं द्रुतमञ्जसा झटिति ॥६९७॥

1 2 3 4 5 6 7
Always, continual, unceasing 11. सततं सन्ततमनिशं नित्यमजस्रं च शश्वदश्रान्तम् ।
8 9 10 11
अविरतमनवरतं स्यादेकार्थमनारतमसक्तम् ॥६९८॥

1 2 3 4 5 6 7 8 9
Large, great 13. बृहदुरु गुरु विस्तीर्णं पुरु पृथु पृथुलं महद्विशालं च ॥।
10 11 a 12 13
व्यूढं विपुलं रुद्रं वरिष्ठमेकार्थमुद्दिष्टम् ॥६९९॥

1 2 3 4 5 6 7
A pair, a couple 7. युग्मं युगं च युगलं द्वन्द्वं द्वितयं यमं यमलम् ।
b 1
Couple of male and female. स्त्रीपुंसयोस्तु युग्मं मिथुनं परिकथ्यते सद्भिः ॥७००॥

c 1 2 3 4 5 6
Abundant; much 10. प्राज्यं भूरि प्रभूतं च प्रचुरं बहुलं बहु ।
d 7 8 9 10
पुरुजं पुष्कलं पुष्टमदभ्रमभिधीयते ॥७०१॥

1 2 3 4 5 6
Full of, gathered, accumulated 9. आचितं निचितं व्याप्तं छन्नं कीर्णं च सङ्कुलम् ।
7 8 9
आकुलं भरितं पूर्णं नातिनानार्थवाचकाः ॥७०२॥

1 2 3 4
Rejected, set aside 7. प्रत्याख्यातं प्रतिक्षिप्तं प्रत्यादिष्टं निराकृतम् ।
5 6 7
निरस्तमपविद्धं च प्राज्ञाः परिहृतं विदुः ॥७०३॥

1 2 3 4
Disrespect, dishonour, contempt 7. अत्याकारः परिभवो निकारश्च पराभवः ।
5 6 7
अनादरश्चाभिभवस्तिरस्कारश्च कथ्यते ॥७०४॥

1 2 3 4 5
Terrible, fearful 10. घोरं प्रतिभयं भीमं दारुणं स्याद्भयानकम् ।
6 7 8 9 10
आभीलं भीषणं भीष्मं भैरवं च भयावहम् ॥७०५॥

1 2 3 4 5
Friendship 10. सख्यं साप्तपदीनं सौहार्दं सौहृदं तथा स्नेहः ।
6 7 8 9 10
मैत्री प्रीतिरजर्यं सभाजनं सङ्गतं प्रोक्तम् ॥७०६॥

a वृन्दं, भद्रं, वड्रं b स्त्रीपुंसयोश्च c प्रायं d पुरुहं ।

